वज्जाउहमरणेणं, पयाइघेण य सुनंदनरनाहो ।
मज्जंतो निहयं पिव, अप्प अइदुहमणुहवइ ॥३१॥
अह निसि चिंतावसगय—निद्दो राया सुरेण एगेण ।
भणिओ भो मित्त ! सोऽहं, मित्तो वज्जाउहो तुज्झ ॥३२॥
तइया तिउरारीहिं, गाढपहारीकयं मुणि व अप्पं ।
नीहरिउं समरंगण-मज्झाइ, आयरिस्स वारणओ ॥३३॥
उद्धरिय सुविहियमग्गं, गरिहियपावो सामाइयंजुत्तो ।
नवकारं समरंतो, जाओ अमरो पढमकप्पे ॥३४॥
ओहीइवलेण वियाणिय, तुह दुक्खं सत्तुनिभयसमुत्थं ।
तं अवणेउं इहयं, पत्तोऽहं परमपेम्मेण ॥३५॥
ता मित्त ! मुयसु खेयं, पभायसमए हवसु रणरत्तो ।
निम्महियारिउं सव्व—स्सं विय समं लहसु कित्तिभरं ॥३६॥
इय मित्तामरवयणं, सोउं राया वियसियमुहसोहो ।
निसाणुगओ सहसा, पडि पडिवक्खं पडिनियत्तो ॥३७॥
अह पउरसमरसंरं-भ विजयगओ पुणो वि तं इत्तं ।
आयामियसामंतियो, सज्जो होउं ठिओऽभिमुहो ॥३८॥
आओहणे व लग्गं, नवरं मित्तामराणुभावेण ।
निज्जिओ सुनंदरन्ना, भीमनरिंदो पढमसमये ॥३९॥
तं सेवापडिवन्नं, रज्जे तत्थेव ठाविय सुनंदो ।
नियदेसं पइ चलिओ, सुरो गओ पुण सठाणम्मि ॥४०॥
मग्गम्मि सुनंदो वि हु, वच्चंतो नियइ सिरिपुरुज्जाणे ।
पढमजिणभवणपासे, मुणिमेगं तरुतलनिसन्नं ॥४१॥
तस्स य पुरओ एगं, पवंगमं पउरलोयमज्झगयं ।
मुणिदिन्नगत्तमुक्का-र मंतआयन्नणपवणं ॥४२॥
तो वि मइयसपरिवारो, राया आगम्म नमिय मुणिपवरं ।
जा तत्थ निसीयइ ता—व वानरो मरणमणुपत्तो ॥४३॥
अह भणइ निवो मुणिपहु-भुज्जमिणं जं अईव चवलमणा ।
इत्थ पवंगमा वि हु, जिणधम्मे निच्चला हुंति ॥४४॥
ता कहसु पुरा को आ-सि एस साहु त्ति साहइ नरिंद ! ।
महुराए आसि पन्नो, वणिओ इत्तो भवे तइए ॥४५॥
संविग्गो पडियवो, कयाइ दिक्खं सुगइगुरुमूले ।
इंसि अपत्तवणिज्जो, जइभावा सुलयनिरओ वि ॥४६॥
अंते काउं अणसणं, जाओ अमरो सुहम्मकप्पम्मि ।
छम्मासंसमाउं, वियाणिउ अप्पणो सो उ ॥४७॥
पुच्छेइ केवलिं वं—दिऊण इत्तो चुयस्स मे भंते ! ।
कत्थुप्पत्ती होही, कहं व पहु बोहिलाभो य ? ॥४८॥
तो केवलिणा भणियं, पज्जंते भद्द ! अट्टझाणेणं ।
मरिऊण वानरो तं, होहिसि सिरिपुरुज्जाणे ॥४९॥
जिणबिंबदंसणाओ, तत्थ लहिस्ससि तुमं कहवि बोहिं ।
इय सोउं सो नियसो, लहु उज्जाणे इमं पत्तो ॥५०॥
तो तुंगसिंगसोहा—पहासियहिमसिहरिसिहरसंरंभं ।
पवणपकंपिरधयवड-रणंतमणिकिंकिणीजालं ॥५१॥
उज्झंतपवरघणसा—र अगुरुमघमघंतगंधड्ढं ।
थंभसहस्ससमेयं, मणिमयभासंतभित्तिल्लं ॥५२॥
सो सिरिजुगाइजिणवर-भवणमिणं तुट्ठमाणसो कासी ।
वज्जाउयसवणेणं, अचियं इमो वानरो जाओ ॥५३॥
कह कह वि सो भमंत-ता इत्थ इत्तो अईय नइयदिणे ।
दिट्ठमिणं जिणभवणं, पत्तं लहु जाइसरणं च ॥५४॥
तो वरागओ सो, मह पासं पत्त अणसणं काउं ।
पंचपरमिट्ठिमंतं, सुमरंतो मरणमणुपत्तो ॥५५॥
इय जा वानरचरियं, कहइ मुणी ता पवंगजीवो सो ।
सोहम्मदेवलोए, हिमवंते वरविमाणम्मि ॥५६॥
सोमकरमिथसंथुय-संथुयसुरसयणसुहरुक्खंग ।
सुसिपुडंतो सुत्ता—हत्त व्व जाओ सुरो पवरो ॥५७॥
उप्पन्ने अणंतरदु-गविहियदव्वसुओ उवओगसत्तो ।
अइसयविम्हियहियओ, पिच्छंतो सयलदिसि वलयं ॥५८॥
जय जय नंदा जय जय, भद्दा इच्चाइमहुरवयणाइं ।
अमरच्छरनियराणं, कीरंतियाहियराणं निसुणंतो ॥५९॥
किं दिन्नं किं नाथियं, किं जिट्ठं वा मए पुरा जम्मे ।
इय चिंतावसओ ओ-हिनाणविन्नायपव्वभवो ॥६०॥
सच्चाइ देवकिच्चा-इ मुत्तु बहुमंदयविप्पगरिसओ ।
तत्थेव लहुं पत्तो, पणओ विणएण मुणिचरणे ॥६१॥
सिरिनाभेयजिणिंदं, अच्चियरोमंचअंचियसरीरो ।
साहुं पुणो पुणो पण-मिऊण पत्तो सुरो सग्गं ॥६२॥
इय दट्ठु सुनंदनिवो, संविग्गो तस्स साहुणो मूले ।
सहसाउहसयविरियि--रज्जो दिक्खं पवज्जेइ ॥६३॥
अह सहसाउहराया, पणमिऊण सुनंदरायरिसि ।
कंपिल्लपुरं पत्तो, निरवयसारं कुणइ रज्जं ॥६४॥
सुचिरं सुनंदसाहू, विहरइ गुरुणा समं महियलम्मि ।
दसविहसामायारी-पालणपवणो पसन्नमणो ॥६५॥
पंडुकुलकंमलभा-णपडिओ सो कया वि रायरिसी ।
गलियसुहज्झवसाओ, चिंतिउमेवं समाढत्तो ॥ ६६ ॥
पडिलेहणपमज्जण—पमुहविहाणं विणा वि किर सुगई ।
लब्भइ जिवेहिं नियइ-भावओ निच्छियं एवं ॥ ६७ ॥
कहमन्नहा महाहव—वावारनिउत्तचित्तवावारओ वि ।
देवत्तं संपत्तो, मित्तो वज्जाउहो मज्झ ? ॥ ६८ ॥
अइसुद्धचरणकिरिया-विगलो वि तया स वानरस्स जीवो ।
उत्तत्तजच्चकंचण-वन्नो नियसो समुप्पन्नो ॥ ६९ ॥
सुयंति य समए वि हु, तह मरुदेव ( तु ) सामिणी सामत्था ।
अकयकिरिया वि मरुदे-विसामिणी सिवपयं पत्ता ॥ ७० ॥
ता तह भरहत्तं चिय, कल्लाणकलावकारणं परमं ।
तव्भावे पुण विहला, सयला कायव्ववावारा ॥ ७१ ॥
संजमतवअप्पाहिं, पावं सोएइ पयमीव तुच्छं ।
मरुदेविपमुहाणं, तविरहिं किं कओ पावो ॥ ७२ ॥
एवं चरणावरण, कम्मविहज्झिनसुद्धपरिणामो ।
सो साहू तक्किरिया-सु सिढिलमणो जाओ ॥७३॥
अह सुयबलेण नाउं, सुगुरू साहुस्स तस्सऽभिप्पायं ।
सुगइपहदेसणाए, खणं पि मा काहिसि पमायं ॥ ७४ ॥
न य एगंतेण नियइ-भावओ होइ कज्जनिप्फत्ती ।
जं पुरिसकारकाला—इणो वि हेऊ इहं भणिया ॥ ७५ ॥

तथा चोक्तम्—

कालो सहाव नियई, पुव्वकयं पुरिसकारणे गंता ।
मिच्छत्तं ते चेव उ, समासओ हुंति सम्मत्तं ॥ ७६ ॥
जं पि हु मरुदेवी पु—व्वमकयतवनियमसंजमा सिद्धा ।
तज्जम्मि च्चिय सुहभा—वजोगओ सिद्धिमणुपत्ता ॥७७॥
जय अच्छेरयभूयं, नवुदाहरणं तहा वि विबुहेहिं ।
ववहारविलोवाओ, कयाऽवि नालंबणीयं ति ॥ ७८ ॥

यथा चागमः—
अह जिणमयं पवज्जह, ता मा ववहारनिच्छए मुयह ।
ववहारनउच्छेए, तित्थुच्छेओ जओ भणिओ ॥ ७९ ॥
ववहारो वि हु बलवं, जं वंदइ केवली वि छउमत्थं ।
आहाकम्मं भुंजइ, सुयववहारं पमाणं तो ॥ ८० ॥

किञ्च—
सिद्धिमग्गसमग्गो, पव्विग्गो जइ जणो निरवज्जो ।
इह भासइ नइ एवं—सुत्तमणिय पहिकयंतो ॥ ८१ ॥
जइ भक्खाउ त्ति य, भिक्खलाभो दुक्करा किरियाए ।
करणं अणुचियं, पि सुंदरं तो जओ भणियं ॥ ८२ ॥
निरवज्जो चउनाणी, सुरमहिओ सिज्झियव्वयधुयम्मि ।
अणिगूहियबलविरिओ, सव्वत्थामेण उज्जमइ ॥ ८३ ॥
इय जइ ते वि हु निच्छ—अणायसंसारसायरा वि जिया ।
अब्भुज्जमंति ता से—सयाण को इत्थ वामोहो ॥ ८४ ॥
इय हियउज्जयकुग्गह–निग्गहमंतोवमं गिरं गुरुणो ।
सोउं सुनंदसाहू, पवज्जिउज्जो महाभागो ॥ ८५ ॥
सुत्तं नियमसग्गह–मालोइय तह गुरूण पयमूले ।
सविसेससिक्खलमणो, अकलंकं कुणइ चारित्तं ॥ ८६ ॥
सुचिरं चरित्तु चरणं, दहिउं झाणानलेण कम्मवणं ।
अणाणानिमिरतरणी—सिद्धिं पत्तो सुनंदमुणी ॥ ८७ ॥
सुनन्दराजर्षिचरित्रमेवं—
श्रुत्वा मनःस्थैर्यकरं सुधर्मे ।
मुमुक्षवोऽसद्ग्रहनिग्रहाय –
प्रज्ञापनीयत्वमिदं श्रयन्तु ॥ ८८ ॥"
ध० र० ३ अधि० ३ लक्ष० ।

सुणंदा–सुनन्दा–स्त्री० । पार्श्वनाथस्वामिनः प्रवर्तिन्याम्, आ० म० १ अ० । कल्प० । बाहुबलिसुन्दर्योर्मातरि ऋषभदेवभार्यायाम्, आ० चू० १ अ० । ("उसभ" शब्दे द्वितीयभागे ११२१ पृष्ठे कथा ।) दक्षिणाञ्जनाद्रेर्दक्षिणदिक्स्थायां पुष्करिण्याम्, जी० २६ कल्प । भूतानन्दस्य नागकुमारेन्द्रस्य लोकपालानामग्रमहिष्याम्, स्था० ४ ठा० १ उ० । भ० । श्रेणिकस्य राज्ञो भार्यायाम्, अभयकुमारस्य मातरि, आ० क० १ अ० । आ० म० । आ० चू० । कल्प० । तुंगियाख्यनगर्याम्, अन्त० ।

सुणंदि–सुनन्दि–स्त्री० । सत्तसम्बन्धिके श्रोत्र, ज्ञा० १ श्रु० १ अ० ।

सुणक्खत्त–सुनक्षत्र–न० । पुष्यादौ शोभने नक्षत्रे, प्रश्न० २ आश्र० द्वार । काकन्दीनगरीवास्तव्यभद्रायाः सार्थवाह्याः पुत्रे, पुं० । अणु० ।

जति णं भंते ! उक्खेवओ एवं खलु जंबू ! तेणं कालेणं तेणं समएणं कागंदीए णगरीए भद्दा णामं सत्थवाही परिवसति अड्ढा०, तीसे णं भद्दाए सत्थवाहीए पुत्ते सुणक्खत्ते णामं दारए होत्था, अहीण ०जाव सुरूवे पंचधातिपरिक्खित्ते जहा धण्णो तहा बत्तीसदाओ ०जाव उप्पिं पासायवडेंसए विहरति । तेणं कालेणं तेणं समएणं समोसरणं जहा धण्णो तहा सुणक्खत्तेऽवि णिग्गते जहा थावच्चापुत्तस्स तहा णिक्खमणं ०जाव अणगारे जाते इरियासमिते ० जाव बंभयारी । तते णं से सुणक्खत्ते अणगारे जं चेव दिवसं समणस्स भगवतो महावीरस्स अंतिए मुंडे ० जाव पव्वतिते तं चेव दिवसं अभिग्गहं तहेव ०जाव बिलमिव आहारेति संजमेणं ०जाव विहरति, बहिया जणवयविहारं विहरति, एक्कारस अंगाइं अहिज्जति, संजमेणं तवसा अप्पाणं भावेमाणे विहरति । तते णं से सुणक्खत्ते ० ओरालेणं जहा खंदतो तेणं कालेणं तेणं समएणं रायगिहे णगरे गुणसिलए चेतिए सेणिए राया सामी समोसढे परिसा णिग्गता राया णिग्गतो धम्मकहा राया पडिगओ परिसा पडिगता । तते णं तस्स सुणक्खत्तस्स अन्नया कयाति पुव्वरत्तावरत्तकालसमयंसि धम्मजागरियं जागर० जहा खंदयस्स बहू वासा परियातो गोतमपुच्छा तहेव कहेति ०जाव सव्वट्ठसिद्धे विमाणे देवे उववन्ने तेत्तीसं सागरोवमाइं ठिती पण्णत्ता, से णं भंते ! महाविदेहे सिज्झिहिति । अणु० १ श्रु० ३ वर्ग । स्था० ।

स्वनामख्याते कोशलजनपदजे वीरजिनान्तेवासिनि, भ० ।

एवं खलु देवाणुप्पिया णं अंतेवासी कोसलजणवए सुणक्खत्ते णामं अणगारे पगइभद्दए ०जाव विणीए । भ० १५ श० ।

( गोशालककृतपराभवस्य तत्रस्यैव 'गोसालग' शब्दे तृतीयभागे १०३० पृष्ठे उक्तम् । )

सुणक्खत्ता–सुनक्षत्रा–स्त्री० । पक्षस्य द्वितीयायां तिथौ, कल्प० १ अधि० ६ क्षण । जं० । चं० प्र० ।

सुणग–सुनक–पुं० । कौलेयके, प्रश्न० १ आश्र० द्वार । जं० । नं० । आचा० । स्था० । उत्त० । अनु० । मृगदंश, प्रज्ञा० ११ पद ।

सुणण–श्रवण–न० । श्रोत्रेन्द्रियविषयीकरणे, स्था० ठा० ३ उ० ।

सुणय–सुनय–पुं० । स्वांशग्राहिणि इतरांशप्रतिक्षेपिणि नये, द्रव्या० ५ अध्या० । नयलक्षणलक्षिते अपेक्षावचने दिगम्बरव्यवस्थायाम्, नं० ।

सुणयण–सुनयन–पुं० । त्रि० । शोभने नयने यस्य सः सुनयनः । सुलोचने, आ० म० १ अ० ।

सुणह–शुनक–पुं० । कुक्कुरे, पि० ।

सुणहमड–शुनकमृत–पुं० । मृते श्वदेहे, जी० ३ प्रति० १ अधि० २ उ० ।

सुणासीर–सुनासीर–पुं० । इन्द्रे, पाइ० ना० २६ गाथा ।

सुणाह–सुनाथ–पुं० । ऋषभदेवस्य पञ्चनवतितमे पुत्रे कल्प० १ अधि० ७ क्षण । अपरकङ्कानगरीराजस्य पद्मनाभस्य पुत्रे, ज्ञा० १ श्रु० १६ अ० ।

सुणिउण–सुनिपुण–त्रि० । सुसूक्ष्मे, सुष्ठु निपुणगुणे च । स १४० सम० ।

मो वेत्यात्मा शरीराश्रयतयाऽप्युपपन्नः । किञ्च-यद्यहमहमित्यय आत्मगोचरः स्यात् तदा न कादाचित्कः स्यात् । आत्मनः सदा संनिहितत्वात्, कादाचित्कं हि ज्ञानं, कादाचित्ककारणपूर्वकं दृष्टम्, यथा सौदामनीज्ञानमिति । नाप्यनुमानेन अव्यभिचारिलिङ्गाऽग्रहणात् । आगमानां च परस्परविरुद्धार्थवादिनां नास्त्येव प्रामाण्यम् । तथाहि-एकेन कथमपि कश्चिदर्थो व्यवस्थापितः, अभियुक्ततरेणाऽन्येन स एवान्यथा व्यवस्थाप्यते, स्वयमव्यवस्थितप्रमाणानां च तेषां कथमन्यव्यवस्थापने सामर्थ्यम्? इति नास्ति प्रमाता प्रमेयं च बाह्योऽर्थः, न चान्तरमपि बाह्यार्थग्राहकत्वेन निर्लोठितः प्रमाणं च स्वपरावभासि ज्ञानम्, तच्च प्रमेयाभावे कस्य ग्राहकमस्तु? निर्विषयत्वात् । किं च-एतत् अर्थसमकालम् तद्भिन्नकालं वा तद् ग्राहकं कल्प्यते? आद्यपक्षे त्रिभुवनवर्तिनोऽपि पदार्थास्तत्राऽवभासेरन्, समकालत्वाविशेषात् । द्वितीये तु निराकारम्, साकारं वा तत् स्यात्? । प्रथमः प्रतिनियतपदार्थपरिच्छेदानुपपत्तेः । द्वितीये तु किमयमाकारो व्यतिरिक्तः, अव्यतिरिक्तो वा ज्ञानात्? । अव्यतिरिक्ते, ज्ञानमेवायम्, तथा च निराकारपक्षदोषः । व्यतिरेके यद्ययं चिद्रूपः, तदानीमाकारोऽपि वेदकः स्यात्, तथा च-अयमपि निराकारः साकारो वा तद्वेदकः स्यात्? इत्याद्यनवस्थाऽनवस्था । अथ-अचिद्रूपः किमज्ञातः, ज्ञातो वा तज्ज्ञापकः स्यात्? प्राचीने विकल्पे, चैत्रस्येव मैत्रस्यापि न तज्ज्ञापकोऽसौ स्यात् । तदुत्तरे तु निराकारेण, साकारेण वा ज्ञानेन, तस्यापि ज्ञानं स्यात् इत्याद्यावृत्तावनवस्थैवेति । इत्थं प्रमाणाभावे तत्फलरूपा प्रमितिः कुतस्तनी?, इति सर्वशून्यतैव परं तत्त्वमिति तथा च पठन्ति "यथा यथा विचार्यन्ते विविच्यन्ते तथा तथा । यदेतत् स्वयमर्थेभ्यो रोचते तत्र के वयम् ? ॥१॥" इति पूर्वपक्षः । विस्तरतस्तु प्रमाणखण्डनं तत्त्वोपप्लवसिंहादवबोधनीयम् ॥ अथ प्रतिविधीयते-ननु यदिदं शून्यवादव्यवस्थापनाय देवानांप्रियेण वचनमुपन्यस्तम्; तत् शून्यम्, अशून्यं वा? । शून्यं चेत्, सर्वोपाख्याविरहितत्वात् खपुष्पमिव नाऽनेन किञ्चित्साध्यते, निषिध्यते वा । ततश्च निष्प्रतिपक्षा प्रमाणादितत्त्वचतुष्टयीव्यवस्था । अशून्यं चेत् प्रलीनस्तपस्वी शून्यवादः? भवद्वचनेनैव सर्वशून्यताया व्यभिचारात् तत्रापि निष्कण्टकैव सा भगवती । तथापि प्रामाणिकसमयपरिपालनार्थं किञ्चित् तत्साधनं उच्यते । तत्र यत्तावदुक्तम्-प्रमातुः प्रत्यक्षेण न सिद्धिः इन्द्रियगोचराऽतिक्रान्तत्वादिति, तदसाधनम् । यत्पुनः, अहंप्रत्ययेन तस्य मानसप्रत्यक्षत्वमनैकान्तिकमित्युक्तम् तदसिद्धम् । अहं सुखी, अहं दुःखी इति अन्तर्मुखस्य प्रत्ययस्य आत्मालम्बनतयैवोपपत्तेः । तथा चाहुः "सुखादि चेत्यमानं हि, स्वतन्त्रं नानुभूयते । मतुबर्थानुवेधात्तु, सिद्धं ग्रहणमात्मनः ॥१॥ इदं सुखमिति ज्ञानं, दृश्यते न घटादिवत् । अहं सुखीति तु ज्ञप्तिरात्मनोऽपि प्रकाशिका ॥२॥" यत्पुनः अहं गौरः, अहं श्यामः' इत्यादिबहिर्मुखः प्रत्ययः स खल्वात्मोपकारकत्वेन लक्षणया शरीरे प्रयुज्यते; यथा प्रियभृत्येऽहमितिव्यपदेशः । यच्च, अहंप्रत्ययस्य कादाचित्कत्वम्, तत्रेयं भावना-आत्मा तावदुपयोगलक्षणः, स च साकारानाकारोपयोगयोरन्यतरस्मिन्नियमेनोपयुक्त एव भवति । अहंप्रत्ययोऽपि बोधोपयोगविशेष एव, तस्य च कर्मक्षयोपशमवैचित्र्यात् इन्द्रियानिन्द्रियालोकविषयादिनिमित्तसव्यपेक्षतया प्रवर्त्तमानस्य कादाचित्कत्वमुपपन्नमेव । यथा-बीजं सत्यामप्यङ्कुरोत्पादनशक्तौ पृथिव्युदकादिसहकारिकारणकलापसमवहितमेवाऽङ्कुरं जनयति, नान्यथा । न चैतावता तस्याङ्कुरोत्पादने कादाचित्केऽपि तदुत्पादनशक्तिरपि कादाचित्की, तस्याः कथंचिन्नित्यत्वात् । एवमात्मनः सदा संनिहितत्वेऽप्यहंप्रत्ययस्य कादाचित्कत्वम् । यदप्युक्तम्-तस्याऽव्यभिचारि लिङ्गं किमपि नोपलभ्यत इति । तदप्यसारं; साध्याऽविनाभाविनोऽनेकस्य लिङ्गस्य तत्रोपलब्धेः, तथाहि-रूपाद्युपलब्धिः सकर्तृका, क्रियात्वात् छिदिक्रियावत्, यश्चास्याः कर्त्ता स आत्मा । न चात्र चक्षुरादीनां कर्तृत्वम्, तेषां कुठारादिवत् करणत्वेनास्वतन्त्रत्वात् । करणत्वं चैषां पौद्गलिकत्वेनाऽचेतनत्वात्, परप्रेर्यत्वात्, प्रयोक्तृव्यापारानपेक्षप्रवृत्त्यभावात् । यदि हि इन्द्रियाणामेव कर्तृत्वं स्यात् तदा तेषु विनष्टेषु पूर्वाऽनुभूतार्थस्मृतेः 'मया दृष्टम्, स्पृष्टम्, घ्रातम्, आस्वादितम्, श्रुतम्' इतिप्रत्ययानामेककर्तृकत्वप्रतिपत्तेश्च कुतः संभवः? । किञ्च-इन्द्रियाणां स्वस्वविषयनियतत्वेन रूपरसयोः साहचर्यप्रतीतौ न सामर्थ्यम् । अस्ति च, तथाविधफलात् रूपग्रहणानन्तरं तत्सहचरितरसानुस्मरणम्, दन्तोदकसंप्लवान्यथानुपपत्तेः । तस्मादुभयोर्गवाक्षयोरन्तरितः प्रेक्षक इव; द्वाभ्यामिन्द्रियाभ्यां रूपरसयोर्दर्शी कश्चिदेकोऽनुमीयते । तस्मात्करणान्येतानि । यश्चैषां व्यापारयिता स आत्मा । तथा, सात्मकोपादानपरिवर्जनद्वारेण हिताहितप्राप्तिपरिहारसमर्था चेष्टा प्रयत्नपूर्विका, विशिष्टक्रियात्वात्, रथक्रियावत् शरीरं च प्रयत्नवदधिष्ठितम् विशिष्टक्रियाश्रयत्वात्, रथवत् । यश्चाऽस्याऽधिष्ठाता, स आत्मा-सारथिवत् । तथाऽत्र पक्षे, इच्छापूर्वकविकृतवाय्वाश्रयत्वाद् भस्त्रावत्, वायुश्च-प्राणापानादिः, यश्चास्याधिष्ठाता, स आत्मा, भस्त्राध्मापयितृवत् । तथाऽत्र पक्षे, इच्छाधीननिमेषोन्मेषवदवयवयोगित्वाद्, दारुयन्त्रवत् । तथा शरीरस्य वृद्धिक्षतभग्नसंरोहणं च प्रयत्नकृतम्, वृद्धिक्षतभग्नसंरोहणत्वात् गृहवृद्धिक्षतभग्नसंरोहणवत् । वृक्षादिगतेन वृद्ध्यादिना व्यभिचार इति चेत् । न, तेषामपि एकेन्द्रियजन्तुत्वेन सात्मकत्वात् । यश्चैषां कर्त्ता, स आत्मा, गृहपतिवत् । वृक्षादीनां च सात्मकत्वमाचाराङ्गाद्यवसेयम्, किं चिद्वक्ष्यते च । तथा प्रेर्यं मनः, अभिमतविषयसंबन्धनिमित्तक्रियाश्रयत्वाद्, दारकहस्तगतगोलकवत् । यश्चास्य प्रेरकः, स आत्मा, इति । तथा, आत्म-चेतन-क्षेत्रज्ञ-जीव-पुरुषादयः पर्याया न निर्विषयाः पर्यायत्वाद्, घट-कुट-कलशादिपर्यायवत्, व्यतिरेके खपुष्पादि । यश्चैषां विषयः, स आत्मा । तथा, अस्त्यात्मा, असमस्तपर्यायवाच्यत्वात्, यो योऽसांकेतिकशुद्धपर्यायवाच्यः, स सोऽस्मारुहाश्वयः । तथा सुखादीनि द्रव्याश्रितानि गुणत्वाद्, रूपवत्, योऽसौ गुणी, स आत्मा, इत्यादिलिङ्गानि । तस्मादनुमानतोऽप्यात्मा सिद्धः । स्था० ।

आभाष्य भगवता किमुक्तोऽयमित्याह-

किं मन्ने अत्थि भूया, उयाहु नत्थि त्ति संसओ तुज्झ ।

सूचनाद्वा सूत्रं, सुष्ठु उक्तमिति वा सूक्तम्। प्राकृतशैल्या तु सुत्तमिति।

सम्प्रति सूत्रशब्दस्यैव निरुक्तान्याह—

निरुत्तियाइँ तस्स उ, सुयइ सिव्वइ तहेव सुवइ त्ति।
अणुसरति त्ति य भेया, तस्स य नामा इमा हुंति॥ २१३॥

तस्य सूत्रस्य निरुक्तान्यमूनि—सूचयतीति सूत्रम्। अथ वा—सीव्यतीति सूत्रम्। यद्वा—स्वपितीति सूत्रम्, अथ वा-अनुसरतीति सूत्रमिति निरुक्तस्य भेदाः, नामानि पुनस्तस्यैतानि सुत्तादीनि भवन्ति।

तान्यथार्थतो व्याख्यानयति—

पासुत्तसमं सुत्तं, अत्थेणाबोहियं ण तं जाणे।
लमसरिसेण तेणं, अत्था संघाइया बहवे॥ २१४॥

यथा द्वासप्ततिकलापण्डितो मनुष्यः प्रसुप्तः सन् न किञ्चित्तासां कलानां जानाति एवमर्थेनाबोधितं न किञ्चिदर्थविशेषं जानाति, यदा त्वर्थेन प्रबोधितं भवति तदा सर्वेषां तदन्तर्गतानां भावानां ज्ञायकमुपजायते। यथा स एव पुरुषः प्रबोधितस्तासां कलानामतः प्रसुप्तसमं सूत्रम्। अथवा-श्लेषसदृशं तत् सूत्रम्, तथाहि-तेन श्लेषसदृशेन-तन्तुसदृशेन बहवोऽर्थाः संघातितास्तेन श्लेषसदृशम्।

संप्रति अर्थस्य सूचनादीनि व्याख्यानयति—

सूइज्जइ सुत्तेणं, सुई नट्ठा वि तह सुएणऽत्थो।
सिव्वइ अत्थपयाणि व, जह सुत्तं कंचुगाईणि॥२१५॥

यथा सूची नष्टा सूत्रेण सूच्यते सूत्रेणोपलक्ष्यते, तथा श्रुतेनार्थः सूच्यते इति अर्थस्य सूचनात् सूत्रम्, एतेन सूचयतीति निरुक्तं व्याख्यातम्। अधुना सीव्यतीति व्याख्यानयति-यथा सूत्रं कञ्चुकादीनि सीव्यति एवमर्थः पदान्यनेकानि सीव्यतीत्यर्थः, सीवनात् सूत्रम्।

अथ स्वपितीति अस्य व्याख्यानमाह—

सूरमणि जलकंतो, व अत्थमेव तु पसवई सुत्तं।
वणियसुगअंधकयवर-तदणुसरंतो सुयं एवं॥ २१६॥

यथा सूर्यकान्तोऽग्निं, जलकान्तो जलं, दीप्तिं स्रवति एवं सूत्रम् अर्थं प्रस्रवतीति सूत्रम्। अनुसरणं द्विधा द्रव्यतो भावतश्च। तत्र द्रव्यतो वणिक्सुतोऽन्धः कचवरं दृष्टान्तः। एकस्य वणिजः पुत्रोऽन्धः, वणिजा चिन्तितम्-एष मत्कोऽर्हिष्टं भुक्तं भुक्त्वा परिभवस्थाने गाढतरं भविष्यतीति द्वौ स्तम्भौ निहत्य तत्र रज्जुर्बद्धा। ततः सोऽन्धः पुत्रो रज्ज्वनुसारेण कचवरं बहिस्त्यजति, एष दृष्टान्तः। अयमर्थोपनयः-वणिक्स्थानीय आचार्यः, अन्धस्थानीयाः साधवः, रज्जुस्थानीयं सूत्रं, कचवरस्थानीयमष्टप्रकारं कर्म। तथा चाह-एवं वणिक्सुतान्धदृष्टान्तप्रकारेण तत्सूत्रमनुसरन् अष्टप्रकारं कर्म कचवरस्थानीयमपनयति। ततः सरणात् सूत्रं, सुष्ठु उक्तं सूक्तमिति नाम तु प्रतीतमिति न व्याख्यातम्। बृ० १ उ० १ प्र०। स्था०। सूत्र०। प्रव०। गणधरादिकृते पञ्चमाङ्गिकधर्मप्रतिपादनपर्यायगकसूत्रादौ, संथा० १ अधि० १ प्रस्ता०। सुत्तं ति वा पवयणं ति वा एगट्ठा। आ० चू० १ अ०। जिनागमे, दर्श० ३ तत्त्व।

सूत्रपदनिक्षेपमाह—

दव्वं तु पोंडयादी, भावे सुत्तमिह सूयगं नाणं।
सण्णासंगहवित्ते, जातिणिबद्धं य कत्थादी॥ ३॥

नामस्थापने अनादृत्य द्रव्यसूत्रं दर्शयति-'पोंडयाइ' त्ति—पोण्डजं च वनीफलादुत्पन्नं कार्पासिकम् आदिग्रहणाद् अण्डजवालजादिग्रहणं, भावसूत्रं तु इह-अस्मिन्नधिकारे सूचकं ज्ञानं-श्रुतज्ञानमित्यर्थः, तस्यैव स्वपरार्थसूचकत्वादिति। तच्च श्रुतज्ञानसूत्रं चतुर्धा भवति, तद्यथा-सञ्ज्ञासूत्रम्, संग्रहसूत्रम्, वृत्तनिबद्धम्, जातिनिबद्धं च। तत्र संज्ञासूत्रं यत् स्वसंकेतपूर्वकं निबद्धम्, तद्यथा—"जे छेए सागारियं न सेवे, सव्वामगंधं परिन्नाय णिरामगंधो परिव्वए" इत्यादि, तथा लोकेऽपि पुद्गलाः संस्काराः क्षेत्रज्ञा इत्यादि, संग्रहसूत्रं तु यत्प्रभूतार्थसंग्राहकम्, तद्यथा-द्रव्यमित्युक्ते समस्तधर्माधर्मादिद्रव्यसंग्रह इति। यद्वा-'उत्पादव्ययध्रौव्ययुक्तं सदिति', वृत्तनिबद्धसूत्रं पुनर्यदनेकप्रकारया वृत्तजात्या निबद्धम्, तद्यथा-'बुज्झिज्ज त्ति तिउट्टिज्ज' इत्यादि, जातिनिबद्धं तु चतुर्धा, तद्यथा—कथनीयं-कथ्यमुत्तराध्ययनज्ञाताधर्मकथादि, पूर्वर्षिचरितकथानकरूपत्वात्तस्य, तथा गद्यम्-ब्रह्मचर्याध्ययनादि, तथा-पद्यम्-छन्दोनिबद्धम्, तथा-गेयम्-यत् स्वरसंचारेण गीतिकाप्रायनिबद्धम्, तद्यथा-कापिलीयमध्ययनम्, 'अधुवे असासयंमि संसारंमि दुक्खपउराए' इत्यादि। सूत्र० १ श्रु० १ अ० १ उ०। "अत्थं भासइ अरिहा, सुत्तं गुंफति गणहरा निउणं। सासणस्स हियट्ठाए, तओ सुत्तं पवत्तइ॥" दर्श० ४ अ०। तत्र गणधरा विशिष्यन्ते निपुणाः सूक्ष्मार्थदर्शित्वात् नियतगुणा निगुणा वा साक्षाद्दृष्टसमस्तगुणत्वात्। आह—तत्पुनः सूत्रं किमादिकं किंपर्यवसानं कियत्परिमाणं को वाऽस्य सार इत्यत आह—

सामाइयमाईयं, सुयनाणं जाव बिंदुसाराओ।
तस्स वि सारो चरणं, सारो चरणस्स निव्वाणं॥

तत् श्रुतज्ञानं सामायिकादिकमस्य तत्सामायिकादि यावत् बिन्दुसारात् बिन्दुसारं यावत् बिन्दुसाराख्यचतुर्दशपूर्वमित्यर्थः। तच्च मूलभेदापेक्षया द्विभेदम्, तद्यथा—अङ्गप्रविष्टम्, अनङ्गप्रविष्टं च। अङ्गप्रविष्टं द्वादशभेदमाचारादिभेदात्। अनङ्गप्रविष्टमनेकभेदमावश्यकं तद्व्यतिरिक्तं कालिकोत्कालिकादिभेदात्। उक्तं च—इत्यनेकद्वादशभेदं श्रुतमिति। आ० म० १ अ०। अनु०।

से किं तं जाणयसरीरभवियसरीरवइरित्तं दव्वसुअं?, जाणयसरीरभवियसरीरवइरित्तं पत्तयपोत्थयलिहिअं, अहवा-जाणयसरीरभवियसरीरवइरित्तं दव्वसुअं पंचविहं पन्नत्तं, तं जहा-अंडयं, बोंडयं, कीडयं, वालयं, वागयं। अंडयं हंसगब्भादि, बोंडयं-कप्पासमाइ, कीडयं पंचविहं पन्नत्तं, तं जहा-पट्टे, मलए, अंसुए, चीणंसुए, किमिरागे, (अनु०) वागयं सणमाइ, से तं जाणयसरीरभवियसरीरवइरित्तं दव्वसुअं। से तं नोआगमतो दव्वसुअं, से तं दव्वसुअं। (सू० ३७।)

अत्र निर्वचनम्—' जाणयसरीरभवियसरीरवइरित्तं दव्वसुअं ' मित्यादि. यत्र ज्ञशरीरभव्यशरीरयोः सम्बन्धि अनन्तरोक्तस्वरूपं न घटते तत् ताभ्यां व्यतिरिक्तं-भिन्नं द्रव्यश्रुतम्. किं पुनस्तदित्याह—' पत्तयपोत्थयलिहियं ' ति पत्रकाणि-तालतल्यादिसम्बन्धीनि तत्संघातनिष्पन्नास्तु पुस्तकाः, ततश्च पत्रकाणि च पुस्तकाश्च तेषु लिखितं पत्रकपुस्तकलिखितम्. अथवा—' पोत्थय ' त्ति-पोतं-वस्त्रं पत्रकाणि च पोतं च तेषु लिखितं पत्रकपोतलिखितं ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यश्रुतम्, अत्र च पत्रकादिलिखितस्य श्रुतस्य भावश्रुतकारणत्वात् द्रव्यत्वमवसेयम्. नोआगमत्वं तु आगमतो द्रव्यश्रुत इव आगमकारणस्यात्मदेहशब्दत्रयरूपस्याभावाद् भावनीयम् । तदेवमेकेन प्रकारेण ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यश्रुतमुक्तम् । साम्प्रतं तदेव प्रकारान्तरेण निरूपयितुमाह—'अहवा' त्यादि. अथ वा-श्रुतं पञ्चविधं प्रज्ञप्तम्, तद्यथा-' अंडयाइ ' त्यादि, अत्राऽऽह-ननु श्रुते प्रक्रान्ते सूत्रस्य प्ररूपणमप्रस्तुतम्. सत्यम्, किन्तु प्राकृतशैलीमङ्गीकृत्य श्रुतस्याण्डजादिसूत्रस्य च सूत्रलक्षणेनैकेन शब्देनाभिधीयमानत्वात्तस्य इदमपि प्ररूपयतीत्यदोषः । प्रसङ्गतोऽण्डजादिसूत्रस्वरूपज्ञापनेन शिष्यव्युत्पत्तिश्च कृता भवति. अत एव भावश्रुते प्रक्रान्ते नामश्रुतादिप्ररूपणमप्रस्तुतमित्याद्यपि प्रगमपास्तं, तस्यापि शिष्यव्युत्पादनादिफलत्वात् । न च भावश्रुतप्रतिपक्षस्य नामश्रुतादेः प्ररूपणमन्तरेण भावश्रुतस्य निर्दोषव्यादिस्वरूपनिश्चयः कर्तुं पार्यते, ' जे सव्वं जाणइ से एगं जाणइ ' त्ति वचनाद् इत्यलं विस्तरेण । अत्राद्यभेदज्ञापनार्थमाह—' से किं तं ' मित्यादि. अत्रोत्तरम्-' अंडयं हंसगब्भाइ ' त्ति-अण्डाज्जातमण्डजम्, हंसः-पतङ्गश्चतुरिन्द्रियो जीवविशेषः, गर्भस्तु तन्निर्वर्तितः कोशिकाकारः, हंसस्य गर्भो हंसगर्भः, तदुत्पन्नं सूत्रमण्डजमुच्यते, आदिशब्दः स्वभेदप्रख्यापनपरः । ननु यदि हंसगर्भोत्पन्नसूत्रमण्डजमुच्यते तर्हि सूत्रे 'अंडय हंसगब्भाइ ' त्ति सामानाधिकरण्यं विरुध्यते, हंसगर्भस्य प्रस्तुतसूत्रकारणत्वादिति, सत्यम् । कारणे कार्योपचारात् तदविरोधः. कोशिकाकारभवं सूत्रं चटकसूत्रमिति लोकप्रतीतमण्डजमुच्यत इति हृदयम्. पञ्चेन्द्रियहंसगर्भसम्भवमन्ये । ' से तं '-मित्यादि निगमनम् । अथ द्वितीयभेद उच्यते—' से किं तं ' मित्यादि. अत्र निर्वचनम्- बोंडय फलिहमाइ ' त्ति-बोण्डं वमनीफलं तस्माज्जातं बोण्डजं, फलिही-वमनी तस्याः फलमपि फलिहं कर्पासाश्रयं कोशकरूपं तदिहापि कारणे कार्योपचाराद्बोण्डजं सूत्रमुच्यत इति भावः । 'से तं' मित्यादि निगमनम् । अथ तृतीयभेद उच्यते—' से किं तं ' मित्यादि अत्रोत्तरम्—' कीडयं पंचविहं ' मित्यादि, कीटाज्जातं कीटजं सूत्रं तत् पञ्चविधं प्रज्ञप्तम्, तद्यथा—'पट्टे' त्ति पट्टसूत्रं मलयम् अंशुकम्, चीनांशुकं कृमिरागम् । अत्र वृद्धव्याख्या किल यत्र विषये पट्टसूत्रमुत्पद्यते, तत्रारण्ये वननिकुञ्जस्थाने मांसचीडादिरूपस्याऽऽमिषस्य पुञ्जाः क्रियन्ते, तेषां च पुञ्जानां पार्श्वतो निम्नोन्नताश्च सान्तरा बहवः कीलका भूमौ निखायन्ते, तत्र वनान्तरेषु संचरन्तः पतङ्गकीटाः समागत्य मांसाद्यभिलाषेणोपभोगलुब्धाः कीलकान्तरेष्वितस्ततः परिभ्रमन्तो लालाः प्रमुञ्चन्ति. ताश्च कीलकेषु लग्नाः परिगृह्यन्ते. इत्येतत् पट्टसूत्रमभिधीयते । अनेनैव क्रमेण मलयविषयोत्पन्नं तदेव मलयम्. इत्थमेव चीनाविषयाद् बहिस्तादुत्पन्नं तदेवांशुकम् इत्थमेव चीनाविषयोत्पन्नं तदेव चीनांशुकमभिधीयते. कीट-विशेषाश्च कीटाविशेषस्याविशेषात् तु पट्टसूत्रादिव्यपदेश इति भावः । एवं क्वचिद्विषये मनुष्यादिशोणितं गृहीत्वा केनापि योगेन युक्तं भाजनसम्पुटे स्थाप्यते. तत्र च प्रभूताः कृमयः समुत्पद्यन्ते. ते च वाताभिलाषिणो भाजनच्छिद्रैर्निर्गत्य आसन्नं पर्यटन्तो यल्लालाजालमभिमुञ्चन्ति तत् कृमिरागं पट्टसूत्रमुच्यते, तच्च रक्तवर्णकृमिसमुत्पन्नत्वात् स्वपरिणामत एव रक्तं भवति । अन्ये त्वभिदधति—यदा तत्र शोणिते कृमयः समुत्पन्ना भवन्ति तदा सङ्क्रमिकमेव तन्मालिन्या किट्टं परित्यज्य रसो गृह्यते, तत्र च कश्चिद् योगः प्रक्षिप्यते, ततस्तेन यद् रज्यते पट्टसूत्रं तत् कृमिरागमुच्यते । तच्च धौताद्यवस्थास्वपि मनागपि कथञ्चिद्रागं न मुञ्चति, 'से तं' मित्यादि निगमनम् । अथ चतुर्थो भेद उच्यते-'से किं तं' त्यादि, अत्रोत्तरम्—(अनु० ।) (वालयपदव्याख्या 'वालय' शब्दे पञ्चमभागे गता ।)

अथ पञ्चमो भेदोऽभिधीयते—'से किं तं' त्यादि. वल्काज्जातं वल्कजं, तच्च सणाभूतं, क्वचित् पुनरतस्यादीति पाठ, तत्रातसीसूत्रं मालवादिदेशप्रसिद्धम्, 'से तं' त्यादि निगमनम् । उक्तं पञ्चविधमण्डजादिसूत्रं, तदुक्तौ चोक्तं ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यश्रुतम्, अतस्तदपि निगमयति—'से तं जाणग' त्यादि, एतदुक्तौ च समर्थितं नोआगमतो द्रव्यश्रुतमतस्तदपि निगमयति—' से तं नोआगमओ ' इत्यादि, एतत्समर्थने च समर्थितं द्विविधमपि द्रव्यश्रुतमतस्तदपि निगमयति—' से तं दव्वसुअमि ' त्यादि । अनु० ।

विध्युद्यमादिसूत्राणि—

विहि १ उज्जम २ वण्णय- ३ भय ४
उस्सग्ग ५ ऽववाय ६ तदुभयगयाइं ७ ।
सुत्ताइँ बहुविहाइं—
समए गंभीरभावाइं ॥ १०६ ॥

ध० र० ३ अधि० ३ लक्ष० । ( अस्या व्याख्या ' सद्धा ' शब्देऽस्मिन्नेव भागे गता । )

अस्खलितादिगुणोपेतं सूत्रमुच्चारणीयम् । किं तत् इत्याह-

अप्पग्गन्थमहत्थं, बत्तीसदोसविरहियं जं च ।
लक्खणजुत्तं सुत्तं, अट्ठहि य गुणेहि उववेयं ॥९९९॥

अल्पग्रन्थं महार्थं च सूत्रं विज्ञेयम्, ''उत्पादव्यय-ध्रौव्ययुक्तं सत्'' इत्यादिवत् सूत्रमल्पग्रन्थं महार्थं च भवतीत्यर्थः, यच्च द्वात्रिंशद्दोषविरहितम्, लक्षणयुक्तं सूत्रमुच्यते । ते चेतेऽन्यत्रोक्ता द्वात्रिंशद् दोषाः—

''अलियमुवघायजणयं, निरत्थयमवत्थयं छलं दुहिलं ।
निस्सारमहियमूणं, पुणरुत्तं वाहयमजुत्तं ॥ १ ॥
कमभिन्नवयणभिन्नं, विभत्तिभिन्नं च लिंगभिन्नं च ।
अणभिहियमपयमेव य, सहावहीणं ववहियं च ॥ २ ॥
कालजइच्छविदोसो, समयविरुद्धं च वयणमित्तं च ।

सुत्ते अलंकारा " इति परिग्रहः । उपनीतं खलु वदन्ति सोपनयं सोपसंहारम् , अनुपचारं नाम—यत्काहलं फल्गुप्रायं तद्विपरीतं सोपचारम् , मितं पदैः श्लोकादिभिर्वा अमितं वर्णकैः,मधुरं त्रिधा सूत्रमधुरम् , अर्थमधुरम् ,उभयमधुरम् , एतैरष्टभिर्गुणैरुपेतम् , बृ० । ( अल्पाक्षरादिशब्देषु तत्तत्पदानामर्थः । )

साम्प्रतमेतेषु हीनाक्षरादिषु प्रायश्चित्तमाह—

खलियमिलियवाइद्धं , हीणं अच्चक्खरं वयंतस्स ।
विश्वामेलियअप्पाडि-पुण्णघोसे य मासलहुं ॥ २०१ ॥

स्खलितं मिलितं व्याविद्धं हीनाक्षरमत्यक्षरं व्यत्याम्रेडितम् अपरिपूर्णघोषं च वदतः प्रत्येकं प्रायश्चित्तं मासलघु । स्वामिनः आज्ञाभङ्गे चतुर्गुरु । स तथाऽन्येऽपि करिष्यन्तीति गुरु । यथोक्तकारी न भवतीति मिथ्यात्वे चतुर्लघु । विराधना द्विविधा-आत्मविराधना च,संयमविराधना च।आत्मविराधना देवतया छलनम् , संयमविराधना कोऽपि साधुर्वारयेत् मा स्खलितादीनि कुरुत ततः कलहतोऽस्थिभङ्गादिः आत्मविराधनायां परितापः महाग्लानाद्यारोपणा संयमविराधना सूत्रस्यान्यथोच्चारणादर्थे विसंवादः , अर्थविसंवादे चरणाभावश्चरणाभावे मोक्षाभाव इति दीक्षा निरर्थिका । लघुग्रहणात् गुरुकमपि—सूचितम् , ह्रस्वोक्त्या यथा दीर्घस्य सूचनम् । तत्र गुरुकमिति वा अनुद्घातमिति वा कालकमिति वा गुरुकस्य नामानि । लघुकमिति वा उद्घातमिति वा शुक्लमिति वा लघुकस्य नामानि । अत्र गुरुलघुविशेषविस्तरपरिज्ञानार्थमाचार्यस्त्रिविधं प्रायश्चित्तं दर्शयति-तथा दानप्रायश्चित्तं तपःप्रायश्चित्तं कालप्रायश्चित्तं वा । तत्र दानप्रायश्चित्तं गुरुकं लघुकं च । एवं तपःकालप्रायश्चित्ते अपि गुरुलघुके प्रत्येकं वक्तव्ये ।

तत्र दानप्रायश्चित्तं गुरुकमाह—

जं तु निरंतरदाणं,जस्स व तस्स व तवस्स तं गुरुकं ।
जं पुण संतरदाणं, गुरू वि सो खलु भवे लहुओ ।२०२।

यस्य वा तस्य वा तपसो गुरुकस्याष्टमादेरगुरुकस्य निर्विकृतिकादेर्यन्निरन्तरं दानं तद्भवति दानप्रायश्चित्तं गुरु । यत्पुनः सान्तरमष्टमादेर्गुरुकस्य तपसो दानं तत् गुर्वपि खलु भवति लघु,यथा आपत्तिश्चतुर्लघुकस्य षड्लघुकस्य वा, तत्राष्टमदशमानि सान्तराणि दीयन्ते । एष दानप्रायश्चित्ते गुरुलघुकयोर्विशेषः ।

सम्प्रति तपःकालयोराह-

कालतवे आसज्ज, गुरु वि होई लहुउ लहुगुरुगो ।
कालो गिम्हो उ गुरू , अट्ठाइतवो लहू सेसो ॥ २०४ ॥

कालं तपश्चासाद्य गुर्वपि लघु भवति, लघ्वपि च गुरु । तत्र कालो ग्रीष्मो गुरुः,तपोऽष्टमादि शेषः कालस्तपश्च लघु । इयमत्र भावना, लघ्वपि यदष्टमादिना तपसा उह्यते तत्तपो गुरु । यन्निर्विकृतिकादिना षष्ठपर्यन्तेनोह्यते तत्तपो लघु । तथा यद् ग्रीष्मे काले उह्यते तत्कालगुरु,वर्षारात्रे हेमन्ते वोह्यमानं काललघु । तदेवं यतः स्खलिताद्युच्चारणे प्रायश्चित्तमज्ञानमिथ्यात्वविराधनाश्च दोषास्तस्मात् सूत्रमस्खलितादिदोषरहितमुच्चारणीयम्-पठनीयं च । एवं पाठितस्य सूत्रव्याख्या कर्तव्या । बृ० १ उ० १ प्रक० । अनु० । आ० म० ।

अथ वेदं सर्वज्ञभाषितसूत्रलक्षणम्—

अप्पक्खरमसंदिद्धं, सारवं विस्सतोमुहं ।
अत्थोभमणवज्जं च, सुत्तं सव्वण्णुभासियं ॥ २८६ ॥

अल्पाक्षरं नाम-मिताक्षरं यथा सामायिकसूत्रम् , असंदिग्धं यत्सैन्धवशब्दवत् लवणपटघोटकाद्यनेकार्थसंशयकारि न भवति, सारवत्-बहुपर्यायं प्रतिसूत्रमनेकार्थाभिधायकं वा, विश्वतो मुखम्-अनेकमुखं प्रतिसूत्रमनुयोगचतुष्टयाभिधानात् , अस्तोभं च वाऽहिहकारादिपदच्छिद्रपूरणस्तोभकशून्यम् स्तोभका निपाता इति पूर्ववैयाकरणेषु प्रसिद्धेः,अनवद्यम् अगर्ह्यम्-न हिंसाप्रतिपादकं "षट् शतानि नियुज्यन्ते,पशूनां मध्यमेऽहनि । अश्वमेधस्य वचनात् , न्यूनानि पशुभिस्त्रिभिः ॥ १ ॥" इत्यादिवचनमिव न हिंसाविधायकम् । एवंभूतं सूत्रं सर्वज्ञभाषितमिति । आ० म० १ अ० ।

एकस्मात् सूत्राद् बहवोऽर्थाः प्रतीयन्ते उत्सर्गापवादादयः सूत्रभेदाः—

एयारिसम्मि वासो, ण कप्पती जति वि सुत्तणुण्णातो ।
अव्वोगडो व भणितो,आयरिओ उवेहती अत्थं ॥२५॥

एतादृश उपाश्रये वासो यद्यपि सूत्रे अनुज्ञातः तथापि न कल्पते यतः अव्याकृतोऽविशेषित एवार्थः सूत्रे भणितः परम् आचार्यस्तमर्थमुत्सर्गापवादविषयविभागप्रकटनेनोन्मीलयति,यथा किलैकस्मात् मृत्पिण्डात् कुलालोऽनेकानि घटशरावादिरूपाणि निष्पादयति एवमाचार्योऽप्येकस्मात् सूत्रपदादभ्यूह्यानेकानर्थविकल्पानामुपदर्शनं करोति । यथा वा सान्धकारगृहादौ विद्यमाना अपि घटादयः पदार्थाः प्रदीपं विना न विलोक्यन्ते तथा सूत्रेऽप्यर्थविशेषाः आचार्यगुणप्रकाशिनाः सन्तोऽपि नोपलभ्यन्ते ।

किं च—

जं जह सुत्ते भणियं, तहेव तं जइ वियालणा नत्थि ।
किं कालियाणुओगो, दिट्ठो दिट्ठिप्पहाणेहिं ॥ २६ ॥

यद्-वस्तु यदात्स्येन विधिरूपेण वा प्रकारेण सूत्रे भणितं तत्तथैव यदि प्रतिपत्तव्यं विचारणा-विषयविभागव्यवस्थापनायुक्ता विमर्शो वा नास्ति-न क्रियते, ततः किं केन हेतुना कालिकश्रुतस्यानुयोगो दृष्टो—विधिवत्प्रयोपलब्धो दृष्टिप्रधानैः , केवलज्ञानश्रुतज्ञानरूपालोचनप्रवरैस्तीर्थकरगणधरैः । अथवा—प्रधानैर्नैगमादिनयमार्गविशारदैः श्रीभद्रबाहुस्वामिभिः , किमिति निर्युक्तिकरणद्वारेण कालिकश्रुतानुयोगो दृष्टः-प्रतिपादितः ।

अपि च—

उस्सग्गसुत्तं किंचि य,किंचि य अववातियं भवे सुत्तं ।
तदुभयसुत्तं किंचि य,सुत्तस्स गमा मुणेयव्वा ॥ २७ ॥

किंचिदुत्सर्गसूत्रं, किञ्चित्पुनरपवादिकं सूत्रं, किञ्चित्तदुभयसूत्रम् । तच्च द्विधा-औत्सर्गापवादिकम् अपवादौत्सर्गिकम् । एते सूत्रस्य गमाः प्रकाराश्चत्वारो ज्ञातव्याः । अथवा-गमा नाम-द्विरुच्चारणीयानि पदानि,तद्यथा-उत्सर्गौत्सर्गिकम् अपवादापवादिकम् । एवमेते द्वौ भेदौ चत्वारश्च प्रागुक्ता इत्येवं सूत्रस्य षड् भेदाः संजाताः, एते च पुरस्तादुदाहरिष्यन्ते ।

अन्येऽपि सूत्रस्य भेदा भवन्तीत्याह—

णेगेसु एगगहणं, सलोमणिल्लोमअकसिणे अइणे ।

विहितभिन्नस्स गहणं, अववाउस्सग्गियं सुत्तं ॥ २८ ॥

अनेकेषु कषायेन्द्रियाश्रवादिष्वर्थेषु यदेकतरेषु क्वापि सूत्रे एकस्यान्यतरस्य ग्रहणं भवेत्, यथा यत्र सूत्रे क्रोधनिग्रहः साक्षादुपादिष्टस्तत्र मानादिनिग्रहादयोऽप्यर्थेन उक्ता द्रष्टव्याः । एवमिन्द्रियाश्रवादिष्वपि भावनीयम् । कानिचित् तु सूत्राणि साधूनां साध्वीनां च प्रत्येकविषयाणि यथैव कल्पाध्ययने सलोमसूत्रं वा ।

तथथा—

नो कप्पइ निग्गंथीणं सलोमाइं चम्माइं धारित्तए वा परिहरित्तए वा ॥ ३ ॥ कप्पइ निग्गंथाणं सलोमाइं चम्माइं धारित्तए वा परिहरित्तए वा । से वि याइं परिहारिए नो चेव णं अपरिहारिए । से वि याइं परिभुत्ते नो चेव णं अपरिभुत्ते । से वि याइं एगराइए नो चेव णं अणेगराइए ॥४॥ नो कप्पइ निग्गंथाणं वा निग्गन्थीण वा कसिणाइं चम्माइं धारित्तए वा परिहरित्तए वा ॥५॥

कानिचित्तु सामान्यसूत्राणि भवन्ति, यथा अकृत्स्नाजिनविषयं सूत्रम् ।

तच्चेदम्—

कप्पइ निग्गंथाण वा णिग्गंथीण वा अकसिणाइं चम्माइं धारित्तए वा परिहरित्तए वा ॥ ६ ॥

अथानानुपूर्व्याऽपि व्याख्यानमिति तत्पदयोर्दर्शनार्थं प्रागुक्तसूत्रपदक्रमध्याच्चतुर्थमिदमुदाहरति 'विहिभिन्नस्स य' इत्यादि, इहैव ग्रन्थे यद् विधिभिन्नस्य ग्रहणमुक्तं तदपवादौत्सर्गिकं सूत्रम् । तच्चेदम्—

कप्पइ निग्गंथीणं पक्के तालपलंबे भिन्ने पडिगाहित्तए से वि य विहिभिन्ने नो चेव णं अविहिभिन्ने ॥५॥ (बृ० १ उ० )

आह-यद्यपवादेनानुज्ञातं तर्हि भूयः कथं प्रतिषिध्यते इत्याह—

उस्सग्गठिइसुद्धं, जम्हा दव्वं विवज्जयं लभति ।

ण य तं होइ विरुद्धं, एमेव इमं पि पासामो ॥ २९ ॥

उत्सर्गस्थित्यानुत्सर्गपदेषु शुद्धमुद्गमादिदोषरहितं यद्भक्तपानादि द्रव्यं ग्रहीतुं कल्पते तदेवापवादपदे यस्माद्विपर्ययं वैपरीत्यं लभते इत्यर्थः, न च—नैव तथा गृह्यमाणं विरुद्धं भवति । ज्ञानादिगुणोपकारकत्वादविरुद्धमेवेति भावः । एवमेवानुमतमपि प्रकृतमथ कल्पते—निर्ग्रन्थीनाम् पक्कं तालप्रलम्बं भिन्नं प्रतिग्रहीतुमित्यपवादेनानुज्ञातस्यापि विधिभिन्नप्रतिषेधरूपमविरुद्धमेव पश्यामः ।

अथोत्सर्गसूत्रादाहरणमित्याह—

उस्सग्गणियरम्मि य, निसज्जकप्पावावादए तिएहं ।

मा संदल मा अट्टी, अववादुस्सग्गियं सुत्तं ॥ ३० ॥

औत्सर्गिकं सूत्रं गोचरं प्रवृत्तः गाथायुगलयापान्तरालेऽपि निषद्या—निषदनं तद्विषयम् । तच्चेदम्—

नो कप्पइ निग्गन्थाण वा निग्गन्थीण वा अनन्तरा गिहंसि वा आसइत्तए वा० जाव काउस्सग्गं वा ठाणं ठाइत्तए त्ति ॥

यत्तु त्रयाणां जराभिभूतादीनां निषद्या कल्पते इत्येवं लक्षणं सूत्रं तदपवादिकं सूत्रम् ।

तच्चेदम्—

अह पुण एवं जाणिज्जा जराजुण्णो वाहिए वाहिओ तवस्सी मुच्छिज्ज वा एवं एहं कप्पइ अंतरागिहंसि आसइत्तए ।

इदं पुनरपवादौत्सर्गिकम्-' मसं दल मा अट्टि ' त्ति-पुद्गलं प्रयच्छ मा अस्थीनि ।

नो कप्पति व अभिन्नं, अववाएणं तु कप्पती भिन्नं ।

कप्पति पक्कं भिन्नं, विधी य अववायउस्सग्गं ॥३१॥

नो कल्पते अभिन्नं तालप्रलम्बं प्रतिग्रहीतुम् । एतद् वा उत्सर्गसूत्रम्, यत्पुनरपवादपदेनाध्वादावमौदर्यादिषु भिन्नं प्रतिग्रहीतुं कल्पते इत्येवरूपं तदपवादिकम् । यत्पुनर्निर्ग्रन्थीनां कल्पते पक्वं तालप्रलम्बं विधिभिन्नं विधिभिन्नमिति सूत्रं तदपवादौत्सर्गिकम् । एतत्प्रागुक्तमपि स्पष्टीकरणार्थमिहाभिहितम् ।

इदं त्वौत्सर्गापवादिकम्—

नो कप्पइ राओ वा वियाले वा सेज्जासंथारयं पडिगाहित्तए नन्नत्थ एगेणं पुव्वपडिलेहिएणं सिज्जासंथारएणं ।

इदं पुनरौत्सर्गिकम्—

नो कप्पइ असणं वा पाणं वा खाइमं वा साइमं वा पढमाए पोरिसीए पडिगाहित्तए एत्थमिम पोरिसिं उवाइणावित्तए से य आहच्च उवाइणावित्तए सिया जो तं भुंजइ भुंजंतं वा साइज्जइ से आवज्जइ चाउम्मासियं परिहारट्ठाणं उग्घाइयं ।

तथा येषु सूत्रेष्वपवादो भणितस्तेष्ववार्थतः पुनरनुज्ञा प्रवर्त्तते तान्यपवादापवादिकानि ।

किं चान्यत्—

कत्थइ देसग्गहणं, कत्थति भण्णंति णिरवसेसाइं ।

उक्कमकमजुत्ताइं, कारणवसओ निउत्ताइं ॥ ३२ ॥

क्वचित् सूत्रे अभिधेयपदानां देशतो ग्रहणं क्रियते, कुत्रापि च निरवशेषाण्यभिधेयपदानि भण्यन्ते, तथा कानिचित्सूत्राण्युत्क्रमयुक्तानि कानिचित्तु क्रमयुक्तानि कारणवशतः कारणविशेषमाश्रित्य नियुक्तानि गणधरादिभिः श्रुतधरैर्विरचितानि ।

एतदेव विवृणोति—

देसग्गहणे बीएहिं, सूयिया मूलमादिणो हुंति ।

कोहादिअणिग्गहिया, सिंचंति भवं निरवसेसं ॥३३॥

देशग्रहणे कृते सति तज्जातीयानां सर्वेषामपि ग्रहणं भवति यथा 'सालीणि वा वीहीणि वा' इत्यादावस्मिन्नव च सूत्रे बीजगृहीतमूलादयोऽपि सदा सूचिता भवन्ति कुत्रापि च सूत्रे निरवशेषाण्यभिधेयपदानि गृह्यन्ते, यथा दशवैकालिके क्रोधादयोऽनिगृहीताः सन्तो भवं—संसारं निरवशेषं चतुर्गतिकमपि सिञ्चन्तीत्युक्तम्, तथा च तत्सूत्रम् " कोहो य माणो य अणिग्गहीया, माया य लोभो य पवड्ढमाणा । चत्ता-

